# श्रीमन्महाभारतम्
## उद्योगपर्व - त्रयस्त्रिंशोऽध्यायः

## प्रजागरपर्व

धृतराष्ट्रविदुरसंवादः

वैशम्पायन उवाच
द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः।
विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम्॥ 5-33-1
प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत्।
ईश्वरस्त्वां महाराजो महाप्राज्ञ दिदृक्षति॥ 5-33-2
एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम्।
अब्रवीद् धृतराष्ट्राय द्वाःस्थं मां प्रतिवेदय॥ 5-33-3
द्वाःस्थ उवाच
विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात्।
द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम्॥ 5-33-4
धृतराष्ट्र उवाच
प्रवेशय महाप्राज्ञं विदुरं दीर्घदर्शिनम्।
अहं हि विदुरस्यास्य नाकल्पो जातु दर्शने॥ 5-33-5
द्वाःस्थ उवाच
प्रविशान्तःपुरं क्षत्तर्महाराजस्य धीमतः।
नहि ते दर्शनेऽकल्यो जातु राजाब्रवीद्धि माम्॥ 5-33-6
वैशम्पायन उवाच
ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम्।
अब्रवीत्प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम्॥ 5-33-7
विदुरोऽहं महाप्राज्ञ सम्प्राप्तस्तव शासनात्।
यदि किञ्चन कर्तव्यमयमस्मि प्रशाधि माम्॥ 5-33-8
धृतराष्ट्र उवाच
सञ्जयो विदुर प्राज्ञो गर्हयित्वा च मां गतः।

अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति॥ 5-33-9
तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया।
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम्॥ 5-33-10
जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि॥ 5-33-11
यतः प्राप्तः सञ्जयः पाण्डवेभ्यो न मे यथावन्मनसः प्रशान्तिः।
सर्वेन्द्रियाण्यप्रकृतिं गतानि किं वक्ष्यतीत्येव हि मेऽद्य [प्र]चिन्ता॥ 5-33-12
तन्मे ब्रूहि विदुर त्वं यथावन्मनीषितं सर्वमजातशत्रोः।
यथा च नस्तात हितं भवेच्च प्रजाश्च सर्वास्सुखिता भवेयुः॥
विदुर उवाच
अभियुक्तं बलवता दुर्बलं हीनसाधनम्।
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः॥ 5-33-13
कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप।
कच्चिच्च परवित्तेषु गृध्यन्न परितप्यसे॥ 5-33-14
धृतराष्ट्र उवाच
श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः।
अस्मिन्राजर्षिवंशे हि त्वमेकः प्राज्ञसम्मतः॥ 5-33-15
विदुर उवाच
राजा लक्षणसम्पन्नस्त्रैलोक्यस्याधिपो भवेत्।
प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः॥ 5-33-16
विपरीततरश्च त्वं भागधेये न सम्मतः।
अर्चिषां प्रक्षयाच्चैव धर्मात्मा धर्मकोविदः॥ 5-33-17
आनृशंस्यादनुक्रोशाद्धर्मात्सत्यात्पराक्रमात्।
गुरुत्वात्त्वयि सम्प्रेक्ष्य बहून्क्लेशांस्तितिक्षते॥ 5-33-18
दुर्योधने सौबले च कर्णे दुःशासने तथा।
एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि॥ 5-33-19
आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता।
वाक्संयमश्च दानं च नैतेष्वेतानि कृत्स्नशः॥
एकस्माद् वृक्षाद्यज्ञपात्राणि राजन्स्रुक्च द्रोणी वोढनी पीडनी च।
एतद्राजन्ब्रुवतो मे निबोध एकस्माद्वै जायतेऽसच्च सच्च॥

यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते॥ 5-33-20
निषेवते प्रशस्तानि निन्दितानि न सेवते।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम्॥ 5-33-21
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते॥ 5-33-22
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते॥ 5-33-23
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते॥ 5-33-24
यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते।
कामादर्थं वृणीते यः स वै पण्डित उच्यते॥ 5-33-25